कथमत्रोच्यते॥ यदापरमोच्चभागात्पंचातिक्रम्य स्थितो भवति तदा द्विभूमिकं करोति॥
यदा भागपंचकादर्वाक् भवति तदा त्रिभूमिकम्॥ यदा पंचमे भागे भवति तदा चतुर्भू
मिकं करोति॥ धनुर्वीत्यादि॥ धनुर्ईरस्थे जीवे वलोपेते त्रिशालं वा कल्प्यम्॥ द्विशा
लमन्येषु पमलेषु॥ मिथुनकन्यामीने षवस्थिते जीवे वलोपेते द्विशालं गृहं वाच्यं
॥षड्भिर्नवांत्याः पादाः खङ्गं गान्येतरालभवनानि॥ विनतत्वे यमलक्षैं करेस्तनुल
मुपयातः॥८॥ लग्नात्षष्ठतृतीयनवमद्वादशराशयः खद्वापाद्वा व कल्प्यो॥९॥ तनु
र्कं भवति॥ लग्नाद्वादशतृतीयो पूर्वपादौ तत्रापि तृतीयो दक्षिणः द्वादशो वामः
षष्ठनवमौ पश्चिमौ॥ तत्र षष्ठो दक्षिणः। नवमो वामः। खङ्गं गान्येतरालभवना
नि। लग्नद्वितीयकौ शीर्षकौ॥ चतुर्थपंचमौ दक्षिणसंज्ञं॥ सप्तमाष्टमौ पादांतभा
गः॥ दशमैकादशौ वामभागं। विनतत्वमित्यादि॥ यस्मिन् खङ्गगे यमलेऽहिस्व

मावराशिर्भवनिनस्थि- आगेष्विनतत्वंबाच्यम्॥ यत्रार्कोभवनिनदंगमईद्रम्॥ यत्रभोम
स्तद्दग्धम्॥ यत्रशनिस्तत्रजीर्णम्॥ अत्रापियमलर्क्षे॥ सोम्यग्रहेईदृशुभे प्यविनतत्वम्॥
पापग्रहेपिस्वोच्चत्रिकोणमित्रक्षेत्रेडपघातः॥ सूतिकागृहद्रव्यज्ञानमाह॥ अर्को
दिनाकमतोहेमसुतोरजतनाति मौक्तिकंलोहम्॥ न लभ्यंबलबद्भिः स्वस्थानेहे
मजीवेपि॥९॥ अर्केबलवतिसूतिकाभरणंताम्रम्॥ चंद्रेमणयः॥ भोमेसुवर्णम्
॥बुधेसुक्तिंइव्यंरीतिकांस्यानि॥ गुरौरोप्यम्॥ सुक्रेमुक्ताफलानि॥ शनौलोहम्
स्वस्थानेहेमजीवेपि॥ धनुर्द्वरमीनयोरन्यतमराशौजीवेसर्वग्रहेभ्योवलवति
रोप्यंनवकंभम्॥ किंचसुवर्णमिति॥ शशिलग्नांतरसंस्याग्रहतुल्याः सूतिका
श्चवक्तव्याः॥ उदगर्द्वभ्यंतरगाबालोच्चकस्पहृस्येई॥१०॥ लग्नाद्वारभ्ययेत्रचं
द्रमाव्यवस्थितस्तदंतरेयावंतोग्रहाः स्थितास्तावत्संख्याउपसूतिकावक्तव्याः

वक्ष्यमाणयुग्दीर्घाध्यायेनासां द्वित्रिगुणत्वादि वक्तव्यम्॥ अयोर्मनस्स्वराशिद्रेक्काणनवां
शके द्विगुणम्॥ वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वे सकृत्त्रिगुणम्॥ उपसूतिकाग्र
हतुल्यरूपा ज्ञातिवयोवर्णरूपा वक्तव्याः॥ उदगर्द्ध इत्यादि॥ उत्तरदिक्व्यवस्थितनक्ष
दृश्य इत्यर्थः॥ तस्मिन्दृश्यदले लग्नचंद्रांतरमास्थाय्यावंतो ग्रहाः स्थितास्तावंत्युपसूति
का वक्तव्याः॥ चंद्रलग्नांतरगानां ग्रहाणां मध्ये यावंतो ग्रहाः दृश्यचक्रार्द्धे व्यवस्थि
तास्तावंत्युपसूतिका गृहाद्बहिर्वाच्याः॥ ॥इति भट्टोत्पलविरचितायां सूक्ष्मजान
कटीकायां सूतिकाध्यायश्चतुर्थः॥ ४॥ अथारिष्टाध्यायं व्याख्यास्यामः॥ ॥
तत्रादौ सद्योरिष्टज्ञानमाह॥ षष्ठेष्टमेपि चंद्रः सद्यो मरणाय पापसंदृष्टः॥ अष्टा
भिः शुभदृष्टो वर्षैर्मिश्रैस्तद्दलेन॥१॥ यस्य जन्मलग्नात् षष्ठे स्थाने चंद्रमा भवति॥
अष्टमे वा पापग्रहैर्दृश्यते तदा जातस्य सद्य एव मरणं वक्तव्यम्॥ अथवा षष्ठाष्टम

गतश्चंद्रमाः पापग्रहेण दृश्यमानः सौम्यग्रहेण दृश्यमानेन तदा जातस्य वर्षे षष्ठे मरणं व
क्तव्यं ॥ अथ षष्ठाष्टमगतः एव चंद्रमाः सौम्येन दृश्यते पापेन च दृश्यते न तदा जातस्य
वर्षे चतुर्थे मरणं भवति ॥ अथ षष्ठाष्टमगतः एव चंद्रमाः न केनचित् दृश्यते न तदा योग
एव न भवति ॥ अरिष्टयोगांतरमाह ॥ राशिचक्रे सौम्यापापैर्भिरवलोकितान
शुभदृष्टाः मासेन मरणदास्तु पापयुतो लग्नपश्चास्तो ॥२॥ लग्नात् षष्ठे स्थाने शुभे
वा कश्चित् सौम्यो भवति ॥ स च पापग्रहेण वक्रगतेन दृश्यते तदा जातस्य मासेन म
रणं वक्तव्यं ॥ चेत् शुभैर्न दृश्यते तदा मरणं वाच्यं ॥ पापयुतो लग्नपश्चास्त इति ॥ य
स्य लग्नाधिपतिः समागमे पापग्रहेण विजितः लग्नात् सप्तमस्थो भवति तदा
जातस्य मासेन मरणं वक्तव्यम् ॥ जितलक्षणम् ॥ दक्षिणदिक्स्थः पुरुषो वे
पथुरप्राप्य संनिवृत्तो ऽणुः ॥ अधिरूढो विकृतो निःप्रभो विवर्णश्च यः स जितः

जि॰

जि॰